मनोवगाहनशास्त्रसम्बन्धिनि विपन्महापङ्के पतितोऽस्मि। प्राप्नुयाम् चेदत्रभवत्या हस्तावलम्बनदानं किञ्चिद्, अतिमात्रं तर्ह्यात्मानमुपकृतमनुभवेयम्।"

मल्लेश्वरगतो नगरयानप्रस्थानकः समागतः। आवाम् उभावपि यानादवातराव।

सा मामपृच्छत्—"क्वास्ति भवतो यातव्यमिदानीम् ?"

किमहं प्रतिब्रूयाम् ? नासीदवधारितं क्व यातव्यमिति किञ्चिदपि मम। तस्मात्किमप्यपमृषितं वाक्यमहमभ्यदधाम्— "यातव्य···क्व ?·· अम् '। अस्ति यातव्यम्···परं···क्व ?···"

नूनं मदीयो मनोरोगो भूयोऽपि प्रत्युदबुध्यत। नेत्रयोः पुरतः सूचीभेद्य तम इव निबिडत्वं प्राप्य प्रसृतमासीत्। कर्तव्याकर्तव्य-विवेक एव विलुप्तः समजायत।

"श्रूयताम् प्रत्यासन्नमेव मम सख्या गृहं विद्यते। नोचेद-नुचितं प्रतीयेत, तत्रैव गच्छावः। विलक्षणं किमपि भवदीयं मस्तिष्कगतं स्थितिजातम् पश्यामि। आयासितमतिमात्रम्भवेत् कारणेन केनापि मस्तिष्कयन्त्रं भवतः। तस्मान्मया सहागत्य तत्र कञ्चित्कालं विश्रान्तिसुखमनुभवतु भवान्।

"विश्रान्तिसुखमिति प्राह भवती ? नाहं जानामि किमि-दानीं करवाणीति। कञ्चित्कालमहमत्रैव पुरो विद्यमानस्य महतो वटवृक्षस्याऽधस्तात् तिष्ठानि। तेनैव मम किमपि विश्रान्ति-सुखं प्रतिपद्येत जातु।"

"नहि तावता तत्प्रतिपद्यते। कृपया, मया सहागच्छतु भवान्। क्वापि···"

"किम्प्रतिपत्तुकामा भवती क्वापि गत्वा ?"

"अथेदानीं क्वापि गत्वा नखम्पचा[1] वाष्पोलिका[2], मापवटकः[3], धिरडकः[4], कामरूपिकाकषायश्चेत्येवमादयः पदार्था गृह्येरन्निति मनसि सञ्जायते ।"

"हन्त, इमे तावन्मयाऽपि ग्रहीतव्याः । नास्ति दोषस्तर्हि मम भवत्या सहागमने । आगच्छामि तावत् ।" अहमवदम् ।

परं यत्राहं प्राप्तस्तद्गृहं नासीत्कस्याप्यन्यतरस्य, किन्तर्हि कुसुमलक्ष्म्या एव खल्वासीत्तद् गृहम् । या हि खल्वियं नवपरिचिता कुमारिका, साऽपि महाराष्ट्रीयैव 'सुलोचना अत्रे' इत्याख्याता कुसुमलक्ष्म्याः परमप्रिया बालसखी । हन्त, एष तावद् वृश्चिकभिया पलायमानस्याऽऽशीविषमुखे निपातः समजायत । कुसुमलक्ष्म्यास्तदनिन्द्यसुन्दरं मुखमण्डलं, तत्र च प्रसर्पन्तीं तां स्वर्गिकस्मितप्रभां विलोक्य किं किमनुभूतं नाम मदीयेन चेतसेति कः शक्नुयाद्वर्णयितुम् ?

न जाने किमनुभूतं भवेत् कुसुमलक्ष्म्याऽपि । परं सर्वथा स्वात्मानं पर्यवस्थाप्य किञ्चिद्विनोदसंवलितेनैव स्वरेण सा मामपृच्छत्—"कुतः सम्प्रति ?"

सुलोचना चकितेवाऽऽवामपश्यत् ।

"अपि पूर्वपरिचितौ युवाम् ?" साऽऽवामपृच्छत् ।

"अथ किम् ?" कुसुमलक्ष्मीः प्रत्यब्रवीत् । अपृच्छच्चापि

---

१. नखम्पचा='गरमागरम' इति भाषायाम् ।

२. वाष्पोलिका='इडली' इति यदुच्यते तत् । 'वाफोल्ऽे' इति मराठीभाषायाम् ।

३. मापवटकः='वड़ा' इति ख्यातः ।

४. धिरडकः='दोसा' इति ख्यातः ।